श्रीमत्सदानन्दयोगीन्द्रविरचितः

# वेदान्तसारः

कौमुदीव्याख्योपेतः

व्याख्याकारः

डॉ० रमाशङ्कर त्रिपाठी

व्याकरणाचार्यः, एम० ए०, पी-एच० डी०

प्रकाशकः

बालकृष्ण त्रिपाठी

बी० १/१२२-३१ ए, डुमरांव कालोनी, अस्सी, वाराणसी।

५

श्रीमत्सदानन्दयोगीन्द्रविरचितः

# वेदान्तसारः

322

कौमुदीव्याख्योपेतः




व्याख्याकारः

**डॉ० रमाशङ्कर त्रिपाठी**

व्याकरणाचार्यः, एम० ए०, पी-एच० डी०

प्रकाशकः

**बालकृष्ण त्रिपाठी**

बी० १/१२२-३१ ए, डुमरांव कालोनी, अस्सी, वाराणसी।

# उपोद्घातः

संसारोऽयं दुःखनिधानम् । नास्ति कश्चित् प्राणिवर्गोऽत्र जगतीतले यः सर्वदा सर्वत्र च सुखस्यैवानुभूतिं कृत्वा सुखी सन्तुष्टश्च स्यात् । कश्चित्सामाजिकेन दुःखेन क्लिश्नाति तर्हि कश्चिन्मानसिकेन शारीरिकेण च कष्टेन दुःखमनुभवति । कश्चिदत्र बुभुक्षावडवाग्निना भस्मीभवति तर्हि कश्चिद्दिव्यान् पदार्थान् भुक्त्वाऽजीर्णताविषदग्धो भवन् सुखदाया निद्रादेव्या निष्फलं स्तोत्रं पठन् समग्रां रजनीमेव तल्पे प्रभातां करोति । कश्चिच्छारदीं ज्योत्स्नामिव स्वकीयां प्राणवल्लभामनवरतं गाढालिङ्गनेनोपगूहितुमिच्छति तदा कश्चिद्गृहे गृहलक्ष्मीमिव समागतां स्वकीयामुद्वाहितां भार्यामपि कण्टकिनीं वल्लरीमिव दर्शनमात्रेणैवोद्वेगकरीमालिंगनेन निखिलशरीरविद्धकरीं चित्तोद्वेगकारिणीञ्चानुभवति । अनया च रीत्या गणनातीतैर्दुःखैर्व्याप्ते निखिले च जगतीतले जनो येन केनापि दुःखेन प्रताडितो भूत्वा तदपघातके हेतौ जिज्ञासां करोति, तद्धानार्थञ्च प्रयतते । तस्य भावप्रवणं हृदयं मतिश्च तथाऽनवरतं कमप्युपायमवाप्तुं प्रयतते यथा तस्य तज्जनानाञ्च दुःखमुपशमितं स्यात्तथा पुनर्न प्ररोहेत् ।

शिशुरचिरोद्भूतं नवागतं वालकं विलोक्य महत्या प्रबलया च जिज्ञासया स्नेहमयीं मातरं प्रति—"वालोऽयं कुतः समायातः, त्वमिमं पार्श्वे कस्मात् स्वापयसि, कस्मादस्मै स्तन्यमर्पयसि" ? एवमादीनि बहूनि प्रश्नवचनान्युपन्यस्यति । एवंविधाया जिज्ञासायाः समुत्पत्तिरवस्थाद्वये जायते —(१) यदा मानवमनो जागतिकप्रपञ्चात् किञ्चिदसम्पृक्ततया शान्तं निश्छलञ्च भवति । तथा (२) यदा व्यक्तिहृदयं दुःखत्रयाभिघातान्मर्माहतं सद् व्यथते । अस्मिन्नेवावस्थाद्वये मानवजिज्ञासा यदाऽन्तिमं सीमानं प्रयाति तदा संस्कारसम्पन्नो मेधावी जनः यत्किञ्चिदपि लिखति वक्ति तथाऽनुभवति—तत्सर्वं दर्शनक्षेत्रं आयाति ।

विश्वस्मिन् प्राचीनतमवाङ्मयस्य ऋग्वेदस्य नासदीयसूक्तस्याविर्भावकालादेवैतादृश्या मानवजिज्ञासायाः सुस्पष्टं दर्शनं जायते। नासदीयसूक्तस्य द्रष्टा ऋषिः कथयति—"को अद्धा वेद, क इह प्र वोचत्, कुत आजाता, कुत इयं विसृष्टिः।" इति।

एतादृशोभिर्जिज्ञासाभिर्दर्शनशास्त्रस्याधारशिला न्यस्ता। तादृश्यो जिज्ञासा दुःखत्रयाभिघाताज्जाता उत शान्तस्य निर्मलस्य च हृदयस्य प्रवृत्तिभिरुत्पन्ना एतदन्यत्।

देशोऽयं भारतः सुदूरातीतकालादेव मौलिकविचाराणां चिन्तनानाञ्चोर्वरो भूमिभाग आसीत्। अतीतानां समकालीनानाञ्च तर्कान् युक्तीश्च खण्डयित्वा सर्वथा नूतनतथ्यानां स्थापनमत्रत्याया मनीषाया निकषमासीत्। अतः सर्वथाविभिन्नाभिर्दृष्टिभिर्विचारसरणिभिश्च विचारणाभिरत्र विविधा दर्शनपद्धतयोऽस्तित्वे समायाताः। एषु सांख्ययोगौ, न्यायवैशेषिके मीमांसा-वेदान्तादय आस्तिकदर्शनानि तथा लोकायतमिति नाम्ना प्रथितं चार्वाकदर्शनम्, आर्हतमितिसंज्ञया विदितं जैनदर्शनम्, एवञ्च सौगतमित्याख्यया विख्यातं बौद्धदर्शनं नास्तिकदर्शनानि सन्ति।

वेदान्त उत्तरमीमांसेति नाम्नाऽपि निगद्यते। अत्र वेदान्तभागानामुपनिषदां प्रतिपाद्यविषयस्य जीवब्रह्मणोरैक्यस्य विवेचनं कृतमास्ते। वेदान्तानामुपनिषदां विषयविवेचकतयोत्तरमीमांसा वेदान्त इति कथ्यते। अधुनातूत्तरमीमांसाऽनेनैव नाम्ना प्राधान्येन व्यपदिश्यते। वेदान्तानामुपनिषदां व्याख्या कतिपयैराचार्यैर्विभिन्नाभिर्दृष्टिभिर्विभिन्नान् सिद्धान्तान् प्रतिपादयितुं कृताऽऽस्ते। आभिर्व्याख्याभिः श्रीमता दर्शनकेशरिणा केरलीक्रोडलालितेन भगवता शङ्कराचार्येणाऽद्वैतवादस्य, रामानुजाचार्येण विशिष्टाद्वैतस्य, मध्वाचार्येण द्वैतस्य, निम्बार्काचार्येण द्वैताद्वैतस्य, बल्लभाचार्येण शुद्धाद्वैतस्य तथा चैतन्यमहाप्रभुणा अचिन्त्यभेदाभेदवादस्य प्रवर्तनं कृतम्। अद्वैतवेदान्तोऽयं शाङ्करवेदान्त इत्यपि निगद्यते, यतोऽस्याचार्यपरम्परायामाद्यशङ्कराचार्यस्य स्थानं सर्वविशिष्टमास्ते। वस्तुतस्तु

जनमानसेऽद्वैतवेदान्तस्य सादरं विहिता प्रतिष्ठा समृद्धिश्च तत्कार्यौं जनमाचार्यशङ्करस्यैव प्रशस्तं कार्यमासीत् ।

आचार्यशङ्करेण महर्षेर्वादरायणस्य ब्रह्मसूत्रे, भगवद्गीतायां तथोपनिषत्सु सुधीजनमानसाह्लादकस्य विद्वद्धृत्तन्त्रीनिनादकस्याद्वैतसमर्थकस्य भाष्यस्य रचनां कृत्वा स्वकीयस्यापराजेयव्यक्तित्वस्याद्वैतवेदान्ते चिरकालपर्यन्तमम्लानाया: प्रभुताया निर्विवादमारोपणञ्च विधाय वस्तुतोऽद्वैतवेदान्तो दर्शननक्षत्रमण्डले मूर्द्धाभिषिक्तः कृतः । प्रशिद्धानामितिहासकाराणां मतेनाचार्यशङ्करस्याविर्भाव: ७८८ ईसवीयवत्सरे तथा तिरोभावस्तु ८२० ईसवीये वत्सरे जातः । यत्कार्यं भगवता शङ्करेण कृतं तत्तु सर्वथा नवीनमेवेति न मतम् । वस्तुतस्तु भगवत: शङ्कराचार्यस्य परमगुरुराचार्यगौडपादः स्वकारिकासु अद्वैतसिद्धान्तस्योद्भावनं पल्लवनञ्च सम्यक् चकार। परञ्च सत्यप्यस्मिन् सर्वस्मिन् अद्वैतवेदान्तकाननैकपञ्चाननस्याचार्यशङ्करस्य यशो न किञ्चिदपि मलिनं कर्तुं शक्यते । यदि शङ्करस्य सहयोगो नामिलत्तर्ह्यद्वैतवेदान्तस्याधुनातनी स्थितिर्न स्यादेतन्निश्चप्रचम् । अस्मिन् कथने कस्यापि शेमुषीजुषो न विप्रतिपत्तिर्भवितुं शक्नोतीति मन्ये ।

## आचार्यशङ्करस्य कार्याणि कृतयश्च

आचार्यशङ्कर: स्वजनुषा भारतभुव: सुदूरं दक्षिणाञ्चलमलञ्चकार । अयं महानुभावो द्रविणब्राह्मणपरिवारस्य देदीप्यमानं हीरकमासीत् । अस्य मेधा तथा तीक्ष्णाऽऽसीद्यथा न कश्चिदपि समकालीन आचार्य: प्रचलितायां विचारसरणौ शास्त्रार्थे सम्मुखे स्थातुमशक्नोत् । स्थिते समक्षं शङ्करे शास्त्रार्थे कस्य पण्डितमानिनो हृदयं नाकम्पत् ? आचार्योऽयं वेदप्रतिपादितस्य वर्णाश्रमधर्मस्याद्वैतवेदान्तस्य च प्रचाराय प्रसाराय च भारतवर्षस्य चतुर्षु दिक्कोणेषु चत्वारि पीठानि स्थापयामास । अस्त्युत्तरस्यां दिशि देवतात्मनि हिमालये हिमश्रृङ्खलानां मध्याञ्चले नातिदूरे बदरिकाश्रमाज्ज्योतिष्पीठम्, पूर्वस्यां दिशि पुरीतिप्रसिद्धे पुरुषोत्तमक्षेत्रे

गोवर्धनपीठम्, दक्षिणाञ्चलेऽस्या भारतभुवो रामेश्वरक्षेत्रे शृङ्गेरीपीठं तथा पश्चिमायां दिशि द्वारकाक्षेत्रे शारदापीठं स्थापितमनेनाचार्यप्रवरेण। एतेभ्यो व्यतिरिक्तं पञ्चमं कामकोटिपीठमयमाचार्यः स्वनिवासार्थं स्थापयामास। पीठमेतत् नगरीललामभूतायां काञ्चीनगर्यां शोभितं सद्विलसति। एषु पीठेष्वभिषिक्ता आचार्या अपि शङ्कराचार्येति नाम्ना प्रथिता जायन्ते। इमेऽद्वैतवेदान्तस्य मर्मज्ञा विद्वांसो भवन्ति। एते महानुभावा अपि काले काले वेदान्तग्रन्थानां रचनां शङ्कराचार्यस्य नाम्ना कुर्वन्ति। एतदेवास्ते कारणं यच्छङ्कराचार्यस्य नाम्ना प्राप्तेषु ग्रन्थेषु कति ग्रन्था आदिशङ्कराचार्यकृता सन्त्यस्य निर्णयो यदि नाशक्यसम्भवस्तर्ह्यत्यन्तं कठिनोऽवश्यमास्ते। तथापि सन्ति कतिपये ग्रन्था ये प्रथमशङ्कराचार्यनिर्मिताः सन्तत्यत्र नास्ति कस्यापि विदुषो वैमत्यम्। ब्रह्मसूत्रे भगवद्गीतायां तथेश-कठ-प्रश्न-मुण्डक-ऐतरेय-तैत्तिरीय-छान्दोग्य-बृहदारण्यकोपनिषत्सु लिखितं भाष्यमादिशङ्कराचार्यस्यैव कृतिरित्यैकमत्येन मन्यते विदुषां समवायः। विष्णुसहस्रनामभाष्यं सनत्सुजातीयभाष्यं गायत्रीभाष्यं तथा मण्डलब्राह्मणोपनिषदि राजयोगभाष्यञ्च प्रौढतायाः सरणेश्चाधारे प्रथमशङ्कराचार्येणैव विरचितानि सन्तीति स्वीक्रियते। उपदेशसाहस्री, विवेकचूडामणिः, आत्मबोधः, अपरोक्षानुभूतिः, पञ्चीकरणम्, दक्षिणामूर्तिस्तोत्रं तथा मोहमुद्गरोऽप्यादिशङ्कराचार्यस्यैव रचनाः सन्तीति समालोचकानां निर्विशङ्का धारणा। कतिपये विद्वांसः प्रपञ्चसारस्य सौन्दर्यलहर्याश्चादिशङ्कराचार्यस्य कृतित्वे सन्देहाकुलाः सन्ति।

आचार्यशङ्करेण योऽद्वैतकल्पवृक्षः सिञ्चितः पल्लवितः पुष्पितश्च कृतः स फलभरितः स्यादित्यर्थमग्रे बहुभिराचार्यैः सपरिश्रममुद्योगो विहितः। एष्वादरास्पदेष्वाचार्येषु बृहदारण्यकोपनिषद्भाष्यवार्तिक—तैत्तिरीयोपनिषद्भाष्यवार्तिक—दक्षिणामूर्तिस्तोत्रवार्तिक-पञ्चीकरणवार्तिक-नैष्कर्म्यसिद्ध्यादीनां ग्रन्थानां निर्माता सुरेश्वराचार्यः, ब्रह्मसिद्धिरचयिता मण्डनमिश्रः, चतुःसूत्रीभाष्ये पञ्चपादिकाव्याख्यायाः कर्ता पद्मपादाचार्यः, विवरणप्रमेयसंग्रहकारो माधवाचार्यः, शारीरकभाष्येऽनुपमव्याख्याया भामत्या

रचयिताऽऽचार्यवाचस्पतिमिश्रः, वेदान्तकौमुदीकारो रामाद्वयः, तथा चित्सुखीरचयिता चित्सुखाचार्यो वैशिष्ट्येन परिगणनीयाः सन्ति ।

आचार्याणामस्यामेव प्रशस्तपरम्परायां खैष्टीयसम्वत्सरस्य पञ्चदश-शताब्द्यां परमहंसपरिव्राजकाचार्यः सदानन्दो वेदान्तसारनामकम् अत्यन्तं लोकप्रियं प्रकरणग्रन्थं रचयामास । अद्वैतवेदान्तस्य सुदृढे दुर्गे प्रवेष्टु-मेतत् सरलतमं द्वारमास्ते, वस्तुनोऽद्वैतवेदान्तक्षीरसागरस्य सश्रममालोडनं विधाय तन्निर्गतं मधुरं नवनीतं ग्रन्थकारोऽस्मिन् प्रकरणग्रन्थे सम्भृतञ्चकार ।

## वेदान्तसारस्य शैली

वेदान्तसारस्य भाषाऽतीव सरला सुबोधा सुस्पष्टा चास्ते । अस्य सरणिर्बोधगम्याऽऽडम्बरविहीना चास्ते । स्वल्पैः सुस्पष्टैश्च शब्दैर्गम्भी-राभिप्रायस्य व्यक्तीकरणे स्वीकृता ग्रन्थकारस्य शैली मनोहारिणी अनुपमा चास्ते । यथाऽन्ये दर्शनकाराः प्रायशः कुर्वन्ति तथाऽयं सरलमप्यभिप्रायं नाच्छादयति वाग्जालैः, अतो ग्रन्थस्याभिप्रायो न भवति दुरूहः । वक्रां गम्भीराञ्च वार्तां सरलैः स्वल्पैश्च शब्दैः कथयित्वा वेदान्तस्य दृढग्रन्थि-मुद्घाटयितुं ग्रन्थकारोऽयमनुपम आस्ते । अनया रीत्या पाठकेभ्य प्रोत्साहनं दत्वा तेषामयं महान्तमुपकारं कुरुते । ग्रन्थकारस्य वैशिष्ट्य-मेतदन्यत्र दुर्लभमस्ति । यथाऽन्ये दर्शनकारा नव्यन्यायभाषायां स्वग्रन्थस्य रचनां विधाय सगर्वमानन्दमनुभवन्ति तथाऽयं ग्रन्थकारः क्वचिदपि प्रमादादपि न करोति । वेदान्तसारस्यैतदेव वैशिष्ट्यं सम्प्रत्यपि विद्वन्-मण्डलीसनाथे समाजे इदं ग्रन्थरत्नं गौरवान्वितं कुरुते । सम्प्रति बह्वीषु योरोपीयभाषासु, अस्य ग्रन्थस्यानुवादः सुलभो वर्तते । अनेनास्य लोक-प्रियताया उपादेयतायाश्च सुस्पष्टः परिचयो मिलति ।

## वेदान्तसारस्य टीकाः

अस्मिन् प्रकरणग्रन्थे सम्प्रति तिस्रः प्राचीनाः टीकाः समुपलभ्यन्ते । आसां विवरणमित्थमास्ते :—

१. सुबोधिनी सम्बोधिनी वा :—वेदान्तसारस्य प्राप्तासु टीकासु टीकेयं प्राचीनतमाऽऽस्ते । अस्याः कर्तुर्नाम नरसिंहसरस्वती वर्तते । विद्वत्प्रवरोऽयं नरसिंहो नरहरिर्वा कथित आसीत् । अयं काश्यां विश्वनाथमन्दिरस्य पार्श्वे निवसति स्म । टीकायाः परिसमाप्तौ स्वस्य स्वनिवासस्थलस्य च विषयेऽनेन लिखितमास्ते । तेन काशीपुराधीश्वरे विश्वनाथेऽस्याव्याहता श्रद्धा प्रतीयते । अस्य टीकाया अवलोकनेनैतदपि विदितं भवति यद्वेदान्तसारस्य कर्ता सदानन्दोऽस्य परमगुरुरर्थात् गुरोर्गुरुरासीत् । टीकापुष्पिकायामयं स्वगुरोर्नाम 'कृष्णानन्दः' इति निर्दिष्टवान् । नरसिंहोऽयं स्वटीकाया रचनां १५१० शकसम्वत्सरे (१५८८ खैष्टाब्दे) चकार । अस्याष्टीकाया मननेन रहस्यमिदं स्पष्टं भवति यदयं वेदान्तविद्यायाः सुविज्ञ आचार्यस्तथा योगस्यानुपमः साधकः संन्यासी च आसीत्[१] ।

२. विद्वन्मनोरञ्जिनी :—अस्याष्टीकाया निर्माता कृष्णतीर्थस्य शिष्यः प्रसिद्धो विद्वान् रामतीर्थयतिरास्ते । महामहोपाध्यायगोपीनाथकविराजोऽमुं महानुभावं मधुसूदनसरस्वत्याः समकालीनं स्वीकुरुते । ऐतिह्यविदां मतानुसारं मधुसूदनसरस्वती, अप्पय्यदीक्षितात्परवर्ती वर्तते । अप्पय्यदीक्षितस्य कालो त्रिंशत्यधिकपञ्चदशशताब्दाद् द्विनवत्यधिकपञ्च-

---

१. विमुक्तक्षेत्रे परमे हि क्षेत्रे सदा पवित्रे नरसिंहयोगी ।
वेदान्तसारस्य चकार टीकां सम्बोधिनीं (सुबोधिनीं) विश्वपतेः पुरस्तात् ॥
जाते पञ्चशताधिके दशशते सम्वत्सराणां पुनः
सञ्जाते दशवत्सरे प्रभुवरः श्रीशालिवाहे शके ।
प्राप्ते दुर्मुखवत्सरे शुभशुचौ मासे नवम्यां तिथौ
प्राप्ते भार्गववासरे नरहरिष्टीकां चकारोज्ज्वलाम् ॥
इति श्रीकृष्णानन्दभगवत्पूज्यपादशिष्यश्रीनरसिंहसरस्वतीकृता वेदान्तसारटीका समाप्ता ।
काशी हि० वि० वि०, हस्तलिखितग्रन्थादुद्धृतम् ।

दशखैष्टाब्दं यावत् स्वीकृत: । अत: मधुसूदनसरस्वत्या: स्वामिनो रामतीर्थस्य च काल: सप्तदशखैष्टाब्दस्य द्वितीयश्चरण: स्वीकर्तुं शक्यते । विद्वन्मनोरञ्जिनी वेदान्तसारस्य भूषणभूता टीका वर्तते । टीकेयमत्यन्तं सरला सुबोधा भावपूर्णा चास्ते । सुबोधिन्या अपेक्षयेयं विस्तृता सारल्येन बोधगम्याऽस्ति । टीकाकारोऽयं कठिनमपि विषयं सरलं कर्तुं सदानन्दमप्यतिशेते ।

३. बालबोधिनी :—अस्याष्टीकाया रचयिता आपदेवद्वितीय आस्ते । अयं खैष्टाब्दस्य सप्तदशशताब्द्या: प्रख्यातेषु मीमांसकेष्वन्यतम आसीत् । टीकेयं क्लिष्टा दुर्बोधा चास्ते । बालबोधिनीति नाम्नोऽपेक्षयाऽस्या वृद्धबोधिनीति नामाधिकं सार्थकतां भजते । टीकेयं पुरा वाणीविलासयन्त्रालयात् प्रकाशिता जाता । यन्त्रालयोऽयं श्रीरंगमिति नाम्ना प्रसिद्धे नगर आस्ते ।

आभ्यष्टीकाभ्यो व्यतिरिक्तानामपि बह्वीनां टीकानामुल्लेखो यत्र तत्र पाण्डुलिपिसूच्यामुपलभ्यते । परञ्चैता अप्रकाशिता अनुपलब्धाश्च सन्ति ।

## सदानन्दस्य समय:

विद्वत्प्रवरेण नृसिंहसरस्वतीनामकेन स्वकीयायाष्टीकाया: सुबोधिन्या: परिसमाप्तौ तस्या निर्माणकाल: १५८८ खैष्टाब्द उल्लिखित आस्ते । सदानन्दो नृसिंहसरस्वत्या: परमगुरुरासीत् । गुरोर्गुरु: परमगुरुरिति निगद्यते । गुरुशिष्यपरम्परायां प्रत्येककुलस्यार्थादेकस्या: श्रेण्या: कृते पञ्चविंशतिवर्षाणामन्तरालमावश्यकं पर्याप्तञ्चास्ते । इत्थं सदानन्दस्य काल: खैष्टाब्दस्य १५३८ तमवर्षस्य सविधे निश्चेतुं शक्यते । यदि परमगुरुशब्दस्यार्थोऽस्ति गुरोर्गुरुस्तदाऽस्याधारे सदानन्दस्य काल: षोडशशताब्द्या: प्रथमचरणात् पूर्व: कथमपि वक्तुं न सुशक:, यथा कतिपये विद्वांस: निर्णेतुं प्रयत्नमकुर्वन् कुर्वन्ति च ।

## सदानन्दानां बाहुल्यम्

संस्कृतवाङ्मयाकाशे सदानन्दनामधारिणो बहवो विद्वांसः स्वप्रभया देदीप्यमाना मिलन्ति। एषु कतिपये विशिष्टा विद्वांसस्तथा ग्रन्थनिर्मातार आसन्। यदि वयमेतेषां सदानन्दानां विषये सूक्ष्मेक्षिकया परिशीलनं कुर्मस्तर्ह्येतद्विदितमेव भविष्यति यदेते सर्वे सदानन्दाः सर्वथा भिन्नाः सन्ति। एतेषां कृतिष्वपि कस्यचिद् भ्रान्तिर्न भविष्यति।

## वेदान्तसारस्य प्रतिपाद्यो विषयः

अद्वैतवेदान्तस्य प्रमुखानि तत्त्वानि सिद्धान्ताश्चैव वेदान्तसारस्य प्रतिपाद्या विषया वर्तन्ते "अस्य वेदान्तप्रकरणत्वात्तदीयैरेवानुबन्धैस्तद्वत्तासिद्धेर्न ते पृथगालोचनीयाः।" वेदान्तसारस्यामून् प्रतिपाद्यविषयान् सम्यगवबुध्य वेदान्तस्य प्रक्रियां वेदान्तसारञ्च हृदयंगमं कर्तुं सारल्यं भविष्यति। अतोऽत्र वेदान्तसारस्यैतेषां प्रतिपाद्यानां विषयाणां किञ्चिद्विवेचनं प्रपञ्च्यते—

## आत्मा

वस्तुतस्त्वात्मैव सत्यो यथार्थश्च। तदतिरिक्तं यत्किञ्चिदपि भासते तत्सर्वं मिथ्या भ्रमश्चास्ते। वेदान्तसम्प्रदाये आत्मब्रह्मणी पर्यायवाचकौ शब्दौ स्तः[1]। आत्मा सच्चिदानन्दस्वरूप आस्ते।

वस्तुतस्त्वात्मा सच्चिदानन्दस्वरूप आस्त इति कथनस्यायमेवाभिप्रायो यद् ब्रह्म (आत्मा) तदास्ते यन्नास्तेऽसत्, न विद्यतेऽचेतनं तथा न भवति निरानन्दमिति। नायमात्मा ज्ञानस्याश्रयोऽपितु ज्ञानस्वरूप एवास्ते।

---

१. अखण्डं सच्चिदानन्दमवाङ्मनसगोचरम्।
आत्मानमखिलाधारमाश्रयेऽभीष्टसिद्धये॥
विस्तरेणावलोकयितुमस्य व्याख्यावलोकनीया।

## अज्ञानम्

अज्ञानं मायाऽविद्या चेत्यपि कथ्यते। यदि ब्रह्म निर्विशेषं समास्ते तर्हि तेन सविशेषस्य जगतः सृष्टिः कथं जाता? एकस्माद् ब्रह्मणः नानानामरूपात्मकस्य जगत उत्पत्तिः कथं जातेत्यादिप्रश्नाः स्वभावतः पुरः समायान्ति। एवमादीन् प्रश्नान् समाधातुमज्ञानस्य स्वरूपज्ञानमावश्यकम्। अत्रेदमवधेयं यदज्ञानं ज्ञानस्याभावरूपं नास्ति। इदमनिर्वचनीयमस्ति। अस्य स्वरूपनिरूपणं न शक्यसम्भवम्। न सन्नासत्। यदीदं सदिति कथ्यते तदाप्यनुपपत्तिर्भवति, जाते ज्ञानेऽस्य बाधात्। तदेव वस्तु सदिति कथ्यते यस्य त्रैकालिको बाधो न स्यात्। यतोऽस्य प्रतीतिर्भवतीतीदमसदित्यपि वक्तुं न शक्यते। अतः सदसद्भ्यामस्यानिर्वचनीयतास्वीकृतिरेव तर्कसहगामिनी। सांख्यस्य प्रकृतिरिवेदं त्रिगुणमास्ते। इदं भावरूपं ज्ञानविरोधि चास्ते। अस्मादेव कारणात् सर्वो जनोऽनुभवति—'अहमज्ञ' इति[१]। इत्थमज्ञानं न सन्नासदिति वक्तुं शक्यते—'सच्चेन्न बाध्येत, असच्चेन्न प्रतीयेत।'

## अज्ञानस्य (मायायाः) कतिपयानि वैशिष्ट्यानि

१—सांख्यस्य प्रकृतिरिवेदमज्ञानमप्यचेतनं जडञ्चास्ते[२]। सांख्यस्य प्रकृतिरविनाशिन्यतो सतीति स्वीक्रियते। किन्त्वद्वैतवेदान्तस्येयं मायाऽस्वातन्त्र्यान्नास्ते सतीत्यवधेयम्। अद्वैतवेदान्तस्य मायेयं स्वरूपधारणाय (स्वास्तित्वाय) ईश्वर आश्रिता भवतीति सिद्धान्तः।

२—माया ब्रह्मणः शक्तिरस्ति। इयं पूर्णतस्तत्रैवाश्रिता भवति। मायाया ब्रह्मणश्च सम्बन्धो विशिष्ट आस्ते।

---

१. अज्ञानं तु सदसद्भ्यामनिर्वचनीयं त्रिगुणात्मकं ज्ञानविरोधि भावरूपं यत्किञ्चिदिति वदन्त्यहमज्ञ इत्याद्यनुभवात्। 'देवात्मशक्तिं स्वगुणैर्निगूढाम्' इत्यादिश्रुतेश्च। पृ० १४॥

२. त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि।
व्यक्तं तथा प्रधानं..............॥ सां० का० ११॥

३—इयं भावरूपाऽऽस्ते। तथापि नेयं सतीति वक्तुं शक्यते। अस्या अभावरूपताभावादेवेयं भावरूपा निगद्यते[1]।

४—अस्या आवरणविक्षेपनामकमस्ति शक्तिद्वयम्। आवरणशक्त्येयं ब्रह्मणो यथार्थं स्वरूपमाच्छादयति तथा विक्षेपशक्त्या तस्मिन् स्वावृतात्मन्यन्यद्वस्त्वाकाशादिप्रपञ्चमुद्भावयति[2]।

५—इयं न सती न चासत्यास्ते। अस्याः स्वरूपस्य याथार्थ्येन निरूपणाभावादेवेयं सदसद्भ्यामनिर्वचनीया निगद्यते।

६—इयं भ्रान्तेरध्यासस्य च जनन्यास्ते। ब्रह्मणि जगद्भ्रमस्योत्पादनइयमेव कारणमस्ति।

७—समुत्पन्ने च ज्ञान इयमपगता भवति।

## मायायाः (अज्ञानस्य) भेदद्वयम्

मायाया (अज्ञानस्य) भेदद्वयमस्ति—समष्टिर्व्यष्टिश्च। पूर्वं प्रतिपादितया रीत्या यदाऽविद्या स्वावरणशक्त्या निखिलमाच्छादयति तदा सा समष्टिपदव्यपदेश्या भवति तथा यदैकं वस्त्वाच्छादयति तदा व्यष्टिपदनिर्देश्या जायते—"इदमज्ञानं समष्टिव्यष्ट्यभिप्रायेणैकमनेकमिति च व्यवह्रियते।" इत्यादि (पृ० १६)।

## ईश्वरः

निर्विशेषं निर्गुणञ्च ब्रह्म यदा मायात्मकसमष्टिरूपोपाधिनाऽऽवृतं भवति तदा तत् सगुणं ब्रह्माऽयमीश्वर इति निगद्यते—"इदमज्ञानं समष्टिव्यष्ट्यभिप्रायेणैकमनेकमिति च व्यवह्रियते।"। इयं समष्टिरुत्कृष्टोपाधितया विशुद्धसत्त्वप्रधाना। एतदुपहितं चैतन्यं सर्वज्ञत्वसर्वेश्वरत्वसर्वनियन्तृत्वा-

---

१. अज्ञानं तु सदसद्भ्यामनिर्वचनीयं त्रिगुणात्मकं ज्ञानविरोधि भावरूपं यत्किञ्चिदिति वदन्ति। (पृ० १४)

२. अस्य ग्रन्थस्य पञ्चविंशतिपृष्ठमवलोकनीयम्।

दिगुणकमव्यक्तमन्तर्यामी जगत्कारणमीश्वर इति च व्यपदिश्यते, सकलाज्ञानावभासकत्वात् ।" (वेदान्तसारः पृ० १६) ।

## जीवः

जीवः प्रकर्षेणाज्ञः प्रायेणाज्ञो वेति व्युत्पत्त्या प्राज्ञ इत्यपि कथ्यते । अज्ञानस्य मायाया वा व्यष्टिरूपोपाधिनाऽऽवृतः सन्नात्मा जीवः कथ्यते—"इयं व्यष्टिर्निकृष्टोपाधितया मलिनसत्त्वप्रधाना । एतदुपहितं चैतन्यमल्पज्ञत्वानीश्वरत्वादिगुणकं प्राज्ञ इत्युच्यते, एकाज्ञानावभासकत्वात् ।" (पृ० १६) । जीवोऽयं शरीरस्येन्द्रियाणाञ्चाध्यक्षस्तथा कर्मफलस्य भोक्ताऽऽस्ते ।

## बन्धनम्

वेदान्तानुसारं समस्तोऽयं जगत्प्रपञ्चो मिथ्या जडो दुःखपूर्णश्चास्ते । केवलं ब्रह्मैव सच्चिदानन्दस्वरूपं वर्तते[1] । अद्वैतवेदान्ते जीवो ब्रह्मणोऽभिन्नो निगदितः । अत एव वेदान्तग्रन्थस्य विषयो जीवब्रह्मैक्यं प्रतिपादितमास्ते[2] । यावज्जीवोऽविद्याश्रृङ्खलया निगडितो भवति तावदेव तस्य वैयक्तिकी सत्ता विराजते । अज्ञानेन निगडितो जीवः स्वं सांसारिकवस्तुभिः सम्बद्धं तदभिन्नं वाऽनुभवति । वेदान्तोक्तदिशा साधनानुष्ठानेन जायमाने ज्ञाने विगलिते चाविद्याबन्धने जनोऽनुभवति—'नाहं शरीरम्', 'न चास्मीन्द्रियम्' 'नास्मि मनः' 'न च वर्ते बुद्धि' रिति । सः स्वमद्वितीयाखण्डब्रह्मणोऽभिन्नमेवानुभवति,[3] जानाति । इयमेवास्ते वास्तविकी स्वस्वरूपोपलब्धिः । परञ्चाविद्यावशाद्यावत्तस्मिन्नहङ्कारस्य रागद्वेषादीनाञ्च भावना विलसन्ति तावज्जीवो ब्रह्मणा सह स्वकीयं तादात्म्यं नावबुद्धयते । स

---

१. वस्तु सच्चिदानन्दाद्वयं ब्रह्म । (पृ० १४)

२. विषयो जीवब्रह्मैक्यं शुद्धचैतन्यं प्रमेयम् । (पृ० ११) ।

३. 'सोऽखिलबन्धरहितो ब्रह्मनिष्ठः' (पृ० ८३) तथा 'अखण्डं ब्रह्मावतिष्ठते' (पृ० ८७) ।

स्वकीयं सत्यं चैतन्यस्वरूपं नानुभवति। एतदेवास्ते जीवस्य बन्धनम्। अज्ञानमेव बन्धनमस्ति।

## मोक्षः

भारतीयमनीषा मोक्षं मानवजीवनस्य सर्वस्वं मन्यते। वेदान्तानुसारं मोक्षस्तु केवलं ज्ञानेनैव लब्धुं शक्यते न तु कर्मभिः। जीवेन स्वस्य सत्यस्य यथार्थस्य च रूपस्य ज्ञानमेव मोक्ष इति निगद्यते। स्वरूपज्ञानमेव मोक्ष इति वेदान्तनवनीतम्। मोक्षो ब्रह्मेति पर्यायवाचिनौ स्तः। यावदयं जीवोऽज्ञानस्य शक्तिभिर्निगडितो भूत्वा स्वं जगत्प्रपञ्चमवैति तावदत्रेतस्ततः परिभ्रमति। यदा सोऽतीतस्य संस्कारवशाद्वर्तमानकालीनायाः साधनायाः परिणामाच्च ब्रह्म साक्षात्करोति (अर्थात् स्वकीयं यथार्थं रूपं जानाति) तदा मुक्तो भवति, ब्रह्म भवति। ज्ञानोदयेनाज्ञानविनाशस्यैव नाम मोक्ष इति।

## सांख्यमद्वैतवेदान्तश्च

अद्वैतवेदान्तस्याध्ययने गृहीतनियमो विचक्षणश्छात्रस्तत्त्वानुसन्धानक्रमे कदाचित्पश्यति सांख्यस्य प्रभावमद्वैतवेदान्ततत्त्वनिर्धारणे।

वेदान्तः सांख्यदर्शनेन प्रभावितोऽस्ति। वस्तुतः सांख्यदर्शनस्यायं प्रभावोऽद्वैतवेदान्ते कियानस्तीति परीक्षायै दर्शनयोर्द्वयोः सृष्टिप्रलयप्रक्रियायास्तथा चेतनवैशिष्ट्यस्य चाध्ययनं कर्तव्यम्।

सांख्यस्य प्रकृतिस्त्रिगुणात्मिकाऽऽस्ते। एकत्र मिलितानां सत्त्वरजस्तमसां साम्यावस्थैव प्रकृतिर्निगद्यते। अनयैव प्रकृत्या समग्रस्य जडजगतः सृष्टिर्भवति। यदेयं जडप्रकृतिः पुरुषस्य संसर्गे समायाति तदात्र स्पन्दनं प्रादुर्भवति। तस्मिन् काले प्रकृतेर्बुद्धिर्बुद्धेरहङ्कारोऽहङ्कारात् पञ्च तन्मात्राण्येकादशेन्द्रियाणि च समुत्पद्यन्ते। एकादशेन्द्रियाणि सन्ति—पञ्च कर्मेन्द्रियाणि पञ्च ज्ञानेन्द्रियाण्येकादशं मन इति। पञ्चतन्मात्रेभ्यः पञ्चमहाभूतान्युत्पद्यन्ते।

सांख्यमते केवल पुरुषस्यैव भोगार्थमपवर्गार्थञ्च प्रकृतिः सृष्टिकार्ये प्रवर्तते[1]। समस्तो जगत्प्रपञ्चः प्रकृतेरेव परिणामः।

अद्वैतवेदान्तोऽपि सम्पूर्णस्य जगत उत्पत्तिं त्रिगुणात्मकादव्यक्ताद-ज्ञानव्यपदेश्यात् स्वीकुरुते। अयमव्यक्तेन सह पुरुषस्य स्थाने ब्रह्मणः संयोगं सृष्टेः कारणरूपेण स्वीकरोति। अज्ञानमपि जडं त्रिगुणात्म-कञ्चास्ते।

साख्यं समग्रस्य जगत्प्रपञ्चस्य कारणं प्रकृतिमेव मन्यते। जगतः सर्वं कार्यं प्रकृत्यधीनम्। पुरुषस्तु सृष्टिकर्मण्युदासीन एव सर्वदाऽऽस्ते। स बुद्धेः संसर्गादात्मानं सुखिनं दुःखिनञ्च मन्यते। वस्तुतस्तु सः सृष्टेः केवलं तटस्थः साक्षी चास्ते। अहंकारेण विमूढात्मा सः स्वस्मिन् कर्तृत्वं भोक्तृत्वञ्च स्वीकरोति। सत्यन्त्विदमास्ते यत्सांख्यानुसारं पुरुषस्य बन्धनं मोक्षश्चारोपितौ, न वास्तविकौ। यथा सैन्यस्य जयपराजयौ सैन्याध्यक्ष आरोपितौ भवतस्तथैव प्रकृतेरेव बन्धमोक्षौ पुरुष उपचर्येते—

तस्मान्न बध्यते नापि मुच्यते नापि संसरति कश्चित्।
संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः॥ (सांख्यकारिका–६२)

अद्वैतवेदान्तानुगुणमपि आत्मा (जीवः) न बद्धो भवति न च मुक्तः। स नास्ते मुमुक्षुर्न च मुक्तः। न तस्य निरोधो भवति न चोत्पत्तिः। (पञ्चदशी, कूटस्थदीपप्रकरणे–७१)। अत्राद्वैतवेदान्तस्य सांख्यस्य च प्रक्रियायां पर्याप्तं साम्यं प्रतीयते। परञ्च द्वयोर्भेदोऽयमत्र वर्तते यत्सांख्ये बन्धमोक्षयोः क्रिया मिथ्या नास्ति। तत्र प्रकृतेर्बन्धमोक्षौ पुरुष आरोपितौ भवतः। परञ्च वेदान्तप्रक्रियायां यदा प्रकृतिरेवाज्ञानं भ्रान्तिश्चास्ते, तदा बन्धमोक्षावपि भ्रान्तौ स्तः।

---

१. पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य।
पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः॥ सांख्य० २१॥

अद्वैतवेदान्त आत्मा एक एवास्ते। अयमज्ञानस्य व्यष्ट्योपहितो भूत्वा नाना प्रतीयते। सांख्यं पुरुषनानात्वं स्वीकुरुते। तदनुसारं पुरुषास्तु बहवः सन्ति—

जन्ममरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च।
पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव ॥ (सांख्यकारिका १८)

इत्थमस्माभिः सांख्यस्य वेदान्तस्य च कतिपयेषु सिद्धान्तेषु साम्यं प्रत्यक्षीक्रियते। परञ्च सांख्यापेक्षया वेदान्तस्य बहवः सिद्धान्ता अधिकविकसितास्तथाभिन्नाः सन्ति। सांख्यादद्वैतवेदान्तस्याधिको विकासस्तु स्वाभाविक एव। सांख्यमद्वैतवेदान्तात्प्राचीनतर आस्ते। स्वतत्त्वानां निर्धारणे सांख्यस्य स्वतंत्रं चिन्तनमासीदित्यत्र नास्ति कस्यचिद्विदुषो वैमत्यम्। वेदान्तस्य तत्त्वप्रक्रिया सांख्यमाधारीकृत्य सरलसरलया रीत्या विकसिता जाता। सांख्येन यथा कृतं तथा वेदान्तेनान्धकारे मार्गान्वेषणं न विहितम्। तस्य समक्षं सांख्यस्य विकसिता तत्त्वप्रक्रिया विपुलं तत्त्वचिन्तनञ्चासीत्। अतः सांख्यापेक्षया वेदान्तस्य चिन्तनधाराया अधिकं सुस्पष्टत्वं विस्तृतत्वं तर्कसंगतत्वञ्च स्वाभाविकमेवेति शम्।

अगस्त १९७४

विदुषां वशंवदः—
रमाशङ्कर त्रिपाठी



# भूमिका

संसार दुःख का आकर है। प्राणियों का ऐसा कोई भी वर्ग नहीं है, जो इस जगत् में पूर्णरूप से सर्वदा सुखी एवं सन्तुष्ट रह सके। किसी को सामाजिक दुःख है, तो किसी को मानसिक एवं शारीरिक। कोई भूख की ज्वाला से दग्ध हो रहा है, तो कोई अपने बोरे के समान विशाल एवं मोटे पेट के अन्दर पड़े लड्डुओं तथा मालपुओं को कवणभास्कर की सहायता से पचाने का जीतोड़ प्रयास करता हुआ मखमली गद्दे पर करवटें बदलता हुआ निष्फल 'निद्रा-स्तोत्र' का पाठ करता हुआ समूची निशा समाप्त कर देता है। कोई अपनी शारदी कौमुदी की तरह प्रेयसी को दिन-रात बाहों में भर लेने का अनवरत स्वप्न देखता रहता है, तो कोई गृहलक्ष्मी बनकर घर में विराजमान प्रेयसी की छाया को भी कण्टक से कम करामाती नहीं समझता है। इस तरह के अगणित द्वन्द्वों से भरपूर इस जगत् में व्यक्ति किसी न किसी दुःख से पीडित होकर उससे छूटने का प्रयास करता है। उसका हृदय एवं मस्तिष्क बरबस उस उपाय को ढूँढ निकालने का प्रयास करता है, जिससे उसके तथा उसके साथियों का दुःख सर्वदा के लिए उपशमित हो जाय।

बालक अपने अनन्तर जन्म लेने वाले शिशु को देख कर बड़ी ही प्रबल जिज्ञासा के साथ अपनी ममतामयी माँ से प्रश्न करता है—"यह बच्चा कहाँ से आया है, क्यों आया है, तुमने अपने पास इसे क्यों सुलाया है?" आदि-आदि। इस तरह की जिज्ञासा का उदय दो अवस्थाओं में होता है–(१) जबकि मानव-मन जागतिक जञ्जाल से कुछ असंपृक्त होने के कारण शान्त एवं निश्चल रहता है और (२) जबकि व्यक्ति का हृदय दैहिक, दैविक तथा भौतिक तापों के थपेड़ों से मर्माहत हो तिलमिला उठता है। इन दोनों ही अवस्थाओं में मानव की जिज्ञासा जब अपनी चरम सीमा पर पहुँच जाती है, तब वह संस्कार-संपन्न मेधावी व्यक्ति जो कुछ लिखता है, बोलता है तथा समझता है—वह सब दर्शन की परिधि में आता है।

विश्व के प्राचीनतम वाङ्मय ऋग्वेद के नासदीय सूक्त के आविर्भाव के काल से ही मानव की इस तरह की जिज्ञासा का साक्षात् दर्शन होता है। नासदीय सूक्त का द्रष्टा ऋषि कहता है—"को अद्धा वेद क इह प्रवोचत कुत आ याता कुत इयं विसृष्टिः।"

बस, इसी तरह की जिज्ञासाओं से, चाहे वे दुःखों के अभिघात से हुई हों और चाहे शान्त एवं निर्मल हृदय की प्रवृत्तियों से, दर्शन शास्त्र की आधार शिला पड़ी।

भारत अतीत के सुदूर काल से ही मौलिक विचारों एवं चिन्तनों का उर्वर भूमि-भाग रहा है। अतीत या समकाल के तर्कों एवं युक्तियों को काटकर सर्वथा नूतन तथ्य की स्थापना यहाँ की मनीषा का निकष था। अतः सर्वथा विभिन्न दृष्टियों और बौद्धिक आयामों से विचार करने के कारण यहाँ विविध दर्शन-सरणियों ने जन्म लिया, जिनमें सांख्य-योग, न्याय-वैशेषिक, मीमांसा एवं वेदान्त आदि आस्तिक दर्शन तथा लोकायत ( चार्वाक ), आर्हत ( जैन ) और सौगत ( बौद्ध ) आदि नास्तिक दर्शन प्रधान हैं।

वेदान्त को उत्तरमीमांसा भी कहते हैं। इसमें वेदों के अन्तिम भाग उपनिषदों के प्रतिपाद्य विषय जीव और ब्रह्म के स्वरूप का विवेचन किया गया है। वेदान्तों ( उपनिषदों ) के विषय का विवेचन होने के कारण उत्तरमीमांसा को भी वेदान्त कहते हैं, और आजकल उत्तरमीमांसा को इसी नाम से मुख्यतया जाना जाता है। वेदान्तों ( उपनिषदों ) की व्याख्या कई आचार्यों ने विभिन्न दृष्टियों से की है। इनमें शङ्कराचार्य के द्वारा अद्वैत, रामानुजाचार्य के द्वारा विशिष्टाद्वैत, मध्वाचार्य के द्वारा द्वैत, निम्बार्काचार्य के द्वारा द्वैताद्वैत, वल्लभाचार्य के द्वारा शुद्धाद्वैत तथा चैतन्यमहाप्रभु के द्वारा अचिन्त्यभेदाभेदवाद का प्रवर्तन किया गया है। अद्वैत वेदान्त शाङ्कर वेदान्त के नाम से भी जाना जाता है, क्योंकि इसकी आचार्य-परम्परा में आचार्य शङ्कर का स्थान सर्वाधिक महत्त्वशाली है। वस्तुतः अद्वैत वेदान्त को जनमानस में प्रतिष्ठित करने का तथा उसे अधिक तर्कसंगत बनाने का कार्य आचार्य शंकर ने ही किया है।

आचार्य शंकर ने महर्षि बादरायण के 'ब्रह्मसूत्र' भगवद्गीता तथा उपनिषदों पर सुधीजन-मन को आन्दोलित कर देने वाले अद्वैतपरक भाष्य की रचना कर

अपने अपराजेय व्यक्तित्व तथा अद्वैत वेदान्त को युग-युग तक म्लान न होनेवाली प्रभुता का निर्विवाद आरोपण कर वस्तुतः अद्वैत वेदान्त को दर्शनों के क्षेत्र में मूर्धाभिषिक्त कर दिया है। प्रसिद्ध इतिहासकारों के अनुसार आचार्य शंकर का आविर्भाव ७८८ ई० में और तिरोभाव ८२० ई० में हुआ था। आचार्य शंकर ने जिस कार्य को किया है, वस्तुतः उसका प्रबल सूत्रपात उपनिषद् युग में ही हो चुका था। आचार्य शंकर के परमगुरु आचार्य गौडपाद ने अपनी कारिकाओं में अद्वैत सिद्धान्त का पल्लवन भली भाँति किया है। किन्तु यहाँ सब कुछ होते हुये भी अद्वैतवेदान्तकेशरी आचार्य शंकर के व्यक्तित्व का यश किञ्चित् भी मलिन नहीं किया जा सकता है। इसमें किसी को आपत्ति नहीं है कि यदि शंकर का सहयोग न मिला होता तो अद्वैत वेदान्त की जो स्थिति आज है, वह निश्चित ही न रही होती।

## आचार्य शङ्कर के कार्य एवं रचनायें

आचार्य शंकर का जन्म सुदूर दक्षिण के द्रविण ब्राह्मण परिवार में हुआ था। इनकी मेधा इतनी तीव्र थी कि इनका कोई भी समकालीन आचार्य इनके सम्मुख विचार-सरणि में स्थिर न हो पाता था। इस आचार्य ने वैदिक वर्णाश्रम-धर्म और अद्वैत वेदान्त के प्रचार एवं प्रसार के लिए भारतवर्ष के चार कोनों में चार पीठों की स्थापना की। उत्तर में हिम-शृङ्खलाओं के मध्य बदरिकाश्रम के निकट ज्योतिष्पीठ, पूरब में पुरुषोत्तम क्षेत्र ( पुरी ) में गोवर्धनपीठ, दक्षिण में रामेश्वर क्षेत्र में शृङ्गेरीपीठ, और पश्चिम में द्वारका धाम में शारदापीठ। इसके अतिरिक्त भी आचार्य ने अपने निवास के लिए काञ्ची में कामकोटिपीठ की स्थापना की थी। इन पीठों पर अभिषिक्त आचार्य भी शंकराचार्य कहे जाते हैं। ये अद्वैत वेदान्त के मर्मज्ञ एवं विद्वान् हुआ करते हैं। ये आचार्य भी समय-समय पर कुछ वेदान्त-ग्रन्थों की रचना शंकराचार्य के नाम से किया करते हैं। यहीं कारण है कि शंकराचार्य के नाम से प्राप्त होने वाले ग्रन्थों में कौन-कौन ग्रन्थ आदि शंकराचार्य द्वारा रचित है, इसका निर्णय करना यदि असम्भव नहीं तो अत्यन्त कठिन अवश्य है। फिर भी कुछ ऐसे ग्रन्थ हैं, जिन्हें आदि शंकराचार्य की निर्विवाद कृति माना जाता है। ब्रह्मसूत्र, भगवद्गीता, ईश, कठ, प्रश्न, मुण्डक, ऐतरेय, तैत्तिरीय, छान्दोग्य और बृहदारण्यक पर लिखा गया भाष्य आदि शंकराचार्य की

ही रचना सर्वसम्मति से स्वीकार की जाती है। विष्णुसहस्रनामभाष्य, सनत्सुजातीयभाष्य, गायत्रीभाष्य और मण्डलब्राह्मणोपनिषद् पर राजयोग भाष्य प्रौढ़ता तथा शैली के आधार पर आदि शंकर के ही माने जाते हैं। उपदेशसाहस्री, विवेकचूडामणि, आत्मबोध, अपरोक्षानुभूति, पञ्चीकरण, दक्षिणामूर्तिस्तोत्र और मोहमुद्गर भी आदि शंकराचार्य की ही रचनायें है - ऐसी विद्वानों की निर्विशंक धारणा है। कुछ विद्वान् प्रपञ्चसार तथा सौन्दर्यलहरी को आदि शंकराचार्य की कृति मानने में संदेह करते हैं।

आचार्य शंकर ने जिस अद्वैत-कल्पवृक्ष को सिञ्चित, पल्लवित तथा पुष्पित किया, उसे अधिक समृद्ध करने में आगे चल कर कतिपय आचार्यों ने अपना बहुमूल्य योगदान किया। इनमें बृहदारण्यकोपनिषद्भाष्य वार्तिक, तैत्तिरीयोपनिषद्भाष्यवार्तिक, दक्षिणामूर्तिस्तोत्रवार्तिक, पञ्चीकरणवार्तिक तथा नैष्कर्म्यसिद्धि के रचयिता सुरेश्वराचार्य, ब्रह्मसिद्धि के निर्माता मण्डनमिश्र, चतुःसूत्रीभाष्य पर पञ्चपादिका नामक व्याख्या के कर्ता पद्मपादाचार्य, विवरणप्रमेयसंग्रहकार माधवाचार्य, शारीरकभाष्य पर बेजोड़ रचना 'भामती' के रचयिता आचार्य वाचस्पति मिश्र, वेदान्तकौमुदीकार रामाद्वय तथा चित्सुखी के निर्माता चित्सुखाचार्य आदि स्वनामधन्य विद्वानों का नाम विशेष रूप से उल्लेखनीय है।

आचार्यों की इसी महनीय परम्परा में आगे चलकर ईसा की पन्द्रहवीं शताब्दी में परमहंस परिव्राजकाचार्य सदानन्द ने वेदान्तसार नामक अत्यन्त लोकप्रिय प्रकरण-ग्रन्थ की रचना की। अद्वैत वेदान्त के सुदृढ़ दुर्ग में प्रवेश पाने के लिए यह एक सरलतम प्रवेश द्वार है। वस्तुतः अद्वैत वेदान्त के समूचे क्षीरसागर का सश्रम आलोडन करके उसके मधुर नवनीत को ग्रन्थकार ने इस ग्रन्थ में सजा-सवाँर कर रक्खा है।

## वेदान्तसार की शैली

वेदान्तसार की भाषा सरल, सुबोध एवं सुस्पष्ट है। इसकी शैली बोधगम्य एवं आडम्बर-विहीन है। स्वल्प तथा सुस्पष्ट शब्दों में अधिक और गम्भीर बातको व्यक्त करने की ग्रन्थकार की शैली मनोहारिणी तथा अद्भुत है। अन्य दार्शनिकों की तरह बात को घुमाफिरा कर किसी बात को दुरूह बनाने की इनकी प्रकृति नहीं है। टेढ़ी से टेढ़ी बात को भी सीधे-सादे ढंग से बतला कर पाठक को वेदान्त

की ग्रन्थियों को सुलझाने में प्रोत्साहन प्रदान करना इस ग्रन्थकार की अपनी विशेषता है। अन्य दर्शनकारों की तरह नव्य-न्याय की भाषा में, अपने ग्रन्थ की रचना कर सदानन्द ने अपनी बात को बखेड़ा बनाने से पूरी क्षमता के साथ बचा लिया है। वेदान्तसार की ये ही विशेषताएँ आज विद्वन्मण्डली में इसे गौरव प्रदान कर रही हैं। सम्प्रति अनेक यूरोपीय भाषाओं में इसका अनुवाद उपलब्ध है, जिससे इनकी लोकप्रियता एवं उपादेयता का स्पष्ट परिचय मिलता है।

## वेदान्तसार की टीकाएँ

वेदान्तसार पर सम्प्रति तीन प्राचीन संस्कृत टीकाएँ मिलती हैं। इनका विवरण निम्न-निर्दिष्ट है—

( १ ) सुबोधिनी या संबोधिनी—वेदान्तसार पर प्राप्त टीकाओं में यह सर्वाधिक प्राचीन है। इस टीका के कर्ता का नाम है 'नृसिंह सरस्वती"। इन्हें नरसिंह या नरहरि भी कहा जाता था। ये काशी में विश्वनाथमन्दिर के आसपास कहीं रहते थे। अपनी टीका की समाप्ति पर अपने तथा अपने निवास-स्थल के विषय में इन्होंने जो कुछ लिखा है, उससे इनकी काशीपुराधीश्वर विश्वनाथ में अटूट श्रद्धा प्रतीत होती हैं। इनकी टीका को देखने से यह भी पता चलता है कि वेदान्तसार के कर्ता सदानन्द इनके परमगुरु अर्थात् गुरु के गुरु थे। टीका की, पुष्पिका में इन्होंने अपने गुरु का नाम कृष्णानन्द बतलाया है। नृसिंह ने अपनी टीका की रचना शक संवत् १५१० अर्थात् ईस्वी सन् १५८८ में की थी। इनकी टीका के मनन से यह बात पूर्ण स्पष्ट हो जाती है कि ये वेदान्तविद्या के सुविज्ञ आचार्य तथा योग के अनुपम साधक विद्वान् संन्यासी थे।[1]

---

१. विमुक्तक्षेत्रे परमे हि क्षेत्रे सदा पवित्रे नरसिंहयोगी।
वेदान्तसारस्य चकार टीकां संबोधिनीं (सुबोधिनीं) विश्वपतेः पुरस्तत्॥
जाते पञ्चशताधिके दशशते संवत्सराणां पुनः,
सञ्जाते दशवत्सरे प्रभुवरश्रीशालिवाहे शके।
प्राप्ते दुर्मुखवत्सरे शुभशुचौ मासे नवम्यां तिथौ,
प्राप्ते भार्गववासरे नरहरिष्टीकां चकारोज्ज्वलाम्॥
इति श्रीकृष्णानन्दभगवत्पूज्यपादशिष्यश्रीनरसिंह—
सरस्वतीकृता वेदान्तसारटीका समाप्ता। ( काशी हि. वि. वि. के मैनुस्क्रिप्ट से उद्धृत )॥

**( २ ) विद्वन्मनोरञ्जिनी**—इस टीका के निर्माता कृष्णतीर्थ के शिष्य प्रसिद्ध विद्वान् रामतीर्थ यति हैं। म० म० गोपीनाथ कविराज के अनुसार ये मधुसूदन सरस्वती के समकालीन थे। मधुसूदन सरस्वती अप्पय दीक्षित के परवर्ती माने गये हैं। अप्पय दीक्षित का काल १५२० से १५९२ ई० माना गया है। अतः मधुसूदन सरस्वती तथा रामतीर्थ का काल ईसा की सत्रहवीं शती का द्वितीय चरण माना जा सकता है। विद्वन्मनोरञ्जिनी वेदान्तसाररूपी सुवर्ण में सुहागे का काम करती है। यह टीका अत्यन्त सरल सुबोध एवं भावपूर्ण है। सुबोधिनी की अपेक्षा यह विस्तृत तथा सरलता से बोधगम्य होने वाली है। यह टीकाकार कठिन विषय को सरल बनाने में सदानन्द से भी एक पग आगे है।

**( ३ ) बालबोधिनी**—इस टीका के रचयिता आपदेव द्वितीय हैं। ये ईसा की सत्रहवीं शती के प्रख्यात मीमांसकों में अन्यतम माने गये हैं। बालबोधिनी क्लिष्ट एवं दुर्बोध है। यदि इसका नाम बालबोधिनी की अपेक्षा वृद्धबोधिनी होता तो अधिक सार्थक होता। यह टीका 'वाणीविलास प्रेस श्रीरंगम्' से प्रकाशित हुई थी।

इनके अतिरिक्त भी मैनुस्क्रिप्ट्स के विभिन्न कैटलागों में वेदान्तसार की कुछ और टीकाओं का नाम-निर्देश मिलता है; किन्तु ये अभी तक न तो देखने में आई हैं और न कहीं से प्रकाशित ही हुई हैं।

## सदानन्द का स्थिति-काल

नृसिंह सरस्वती ने अपनी टीका सुबोधिनी के अन्त में उसकी रचना का काल १५८८ ई० ( शक० १५१० ) बतलाया है। सदानन्द नृसिंह सरस्वती के परमगुरु ( गुरु के गुरु ) थे। गुरु-शिष्य-परम्परा में प्रत्येक पीढ़ी के लिये २५ वर्ष का समय देना पर्याप्त होता है। अतः सदानन्द का काल १५३८ ई० के कुछ पूर्व तथा उसके वर्तमान समय तक मानना अधिक समीचीन होगा। यदि परमगुरु शब्द का अर्थ है—'गुरु का गुरु' तो इसके आधार पर सदानन्द को सोलहवीं शताब्दी के प्रथम चरण से पूर्व नहीं खींचा जा सकता है, जैसा कि कतिपय विद्वानों ने करने का दुष्प्रयास किया है।

## सदानन्दों की अधिकता

संस्कृत-वाङ्मय में एकाधिक सदानन्द नामधारी विद्वान् मिलते हैं। इनमें

कुछ विशिष्ट विद्वान् तथा ग्रन्थ-रचयिता भी थे। किन्तु ध्यान से इन सदानन्द नामक आचार्यों के विषय में अध्ययन करने से स्फटिक की भांति यह बात स्पष्ट हो जाती है कि सभी सदानन्द एक नहीं भिन्न-भिन्न हैं, और इनकी कृतियों के विषय में कोई भ्रांति नहीं हो सकती है।

## वेदान्तसार के प्रतिपाद्य विषय

अद्वैत वेदान्त के प्रमुख तत्त्व एवं सिद्धान्त ही वेदान्तसार के प्रतिपाद्य विषय हैं। वेदान्तसार के इन प्रतिपाद्य विषयों को समझ लेने पर वेदान्त की प्रक्रिया एवं वेदान्तसार को समझने में सरलता होगी। अतः यहाँ वेदान्तसार के इन प्रतिपाद्य विषयों का दिग्दर्शन कराया जा रहा है—

### आत्मा

वस्तुतः आत्मा ही सत्य है, यथार्थ है। उसके अतिरिक्त जो भी कुछ प्रतीत हो रहा है, सब मिथ्या है, भ्रम है। वेदान्त सम्प्रदाय में आत्मा एवं ब्रह्म—दोनों—पर्यायवाचक शब्द हैं। आत्मा सत् चित् और आनन्द स्वरूप है। सच तो यह है कि ब्रह्म (आत्मा) न तो सत् है, न तो चित् है और न आनन्द स्वरूप ही है। वह निर्गुण है, निर्धर्म है। ऐसी अवस्था में उसे सत् चित् तथा आनन्दरूप कहना कैसे युक्ति-संगत हो सकता है? इसका उत्तर यही दिया जा सकता है कि आत्मा को सच्चिदानन्द कहना औपचारिकमात्र है। वस्तुतः सच्चिदानन्द का अर्थ है—ब्रह्म (आत्मा) वह है जो असत् अचेतन तथा निरानन्द नहीं है। यह आत्मा ज्ञान का आश्रय नहीं, अपितु ज्ञानस्वरूप ही है।

### अज्ञान

अज्ञान को माया और अविद्या भी कहा जाता है। प्रश्न उठता है, यदि ब्रह्म निर्विशेष तथा निर्लक्षण है तो उससे सविशेष तथा सलक्षण जगत् की सृष्टि कैसे हुई? एक ब्रह्म से इस नानारूपात्मक जगत् की उत्पत्ति कैसे सम्भव हुई? आदि प्रश्नों के समाधान के लिये अज्ञान का स्वरूप जानना आवश्यक है। यहाँ यह समझ लेना आवश्यक होगा कि अज्ञान ज्ञान का अभावरूप नहीं है। यह अनिर्वचनीय है। इसके स्वरूप का कुछ भी निर्धारण सम्भव नहीं है। यह न सत् है और न असत् ही। यदि इसे सत् माना जाय तो भी ठीक नहीं हो सकता, क्योंकि ज्ञान होने की अवस्था में इसका बाध हो जाता है। वहीं

वस्तु सत् होती है, जो त्रिकाल में बाधित न हो सके। इसे असत् भी नहीं माना जा सकता, क्योंकि इसकी प्रतीति होती है। अतः इसे सत् तथा असत् आदि से अनिर्वचनीय मानना ही तर्कसम्मत होगा। सांख्य की प्रकृति की भाँति यह त्रिगुण है। यह भावरूप एवं ज्ञानविरोधी भी है। यही कारण है कि प्रत्येक व्यक्ति यह अनुभव करता है कि "अहमज्ञः" मैं अज्ञ हूँ'।

अज्ञान (माया) की कुछ विशेषताएँ—

१—सांख्य की प्रकृति की भाँति ही यह भी अचेतन और जड़ है। सांख्य की प्रकृति अविनाशी होने के कारण सत् है, किन्तु अद्वैत वेदान्त की यह माया स्वतन्त्र न होने के कारण सत् नहीं है। यह अपने अस्तित्व के लिये ईश्वर पर आधारित है।

२—माया ब्रह्म की शक्ति है। यह ब्रह्म से अविभाज्य तथा पूर्णतः उसी पर आधारित है। माया और ब्रह्म का सम्बन्ध भी एक विशेष प्रकार का ही सम्बन्ध है, जिसे 'तादात्म्य' सम्बन्ध कहते हैं।

३—यह भावस्वरूप है। फिर भी इसे सत् नहीं कहा जा सकता। अभावात्मक न होने के कारण ही इसे भावरूप माना जाता है।

४—इसकी आवरण तथा विक्षेप नामक दो शक्तियाँ हैं। अपनी आवरण शक्ति से यह वस्तु ( ब्रह्म ) के यथार्थ रूप को ढक लेती है, और विक्षेपशक्ति से उसमें अन्य वस्तु ( अर्थात् जगत् के ) होने का भ्रम पैदा करती है।

५—यह न सत् है, न असत् है। इसके स्वरूप का ठीक-ठीक निर्धारण न हो सकने के कारण इसे अनिर्वचनीय कहते हैं।

६—यह भ्रान्ति और अध्यास की जननी है। इसी के कारण ब्रह्म में जगत् का भ्रम होता है।

७—यह ज्ञान से समाप्त हो जाती है।

माया ( अज्ञान ) के भेद—

माया ( अज्ञान ) के दो भेद हैं—( १ ) समष्टि और ( २ ) व्यष्टि। ऊपर बतलाये गये प्रकार से जब अविद्या अपनी आवरण शक्ति के द्वारा सब वस्तु ढक लेती है, तब उसे अविद्या या अज्ञान की समष्टि कहते हैं, और जब एक वस्तु को ढकती है, तब उसे अविद्या या अज्ञान की व्यष्टि कहते हैं।

## ईश्वर

निर्विशेष एवं निर्गुण ब्रह्म जब माया की समष्टि रूप उपाधि से आवृत होता है, तब सगुण ब्रह्म या ईश्वर कहा जाता है।

## जीव

जीव को व्यष्टि एवं प्राज्ञ भी कहते हैं। अज्ञान या माया को व्यष्टि रूप उपाधि से आवृत होने पर आत्मा को जीव कहा जाता है। यह शरीर और इन्द्रियों का अध्यक्ष तथा कर्म-फल का भोक्ता है।

## बन्धन

वेदान्त के अनुसार समस्त जगत्प्रपञ्च असत्य, जड और दुःखपूर्ण है। एकमात्र ब्रह्म ही सत् चित् एवं आनन्दमय है। जीव और ब्रह्म अभिन्न हैं। जब तक जीव अविद्यारूपी पाश में जकड़ा रहता है, तभी तक उसकी वैयक्तिक सत्ता रहती है। वह अपने आप को संसार की वस्तुओं से जुड़ा हुआ अथवा अभिन्न मानने लगता है। साधना के फलस्वरूप जब जीव का अविद्यारूपी पाश, ज्ञान के उदित होने पर, विनष्ट हो जाता है, तब उसे भान होता है कि न वह शरीर है, न इन्द्रिय है, न मन है और न बुद्धि ही है। वह अपने आप को अद्वितीय अखण्ड ब्रह्म से अभिन्न समझने लगता है। यही है उसकी अपने सही स्वरूप की उपलब्धि। किन्तु अविद्या के कारण जब तक उसमें अहंकार एवं राग-द्वेष आदि की भावनाएँ बनी रहती हैं, तब तक जीव ब्रह्म के साथ अपने तादात्म्य को नहीं पहचान पाता है। वह अपने सही स्वरूप चैतन्य को नहीं समझ पाता है। यही है जीव का बन्धन। अज्ञान ही बन्धन है।

## मोक्ष

भारतीय मनीषा ने मोक्ष को मानव-जीवन का सर्वस्व माना है। वेदान्त के अनुसार यह मोक्ष एकमात्र ज्ञान से ही उपलब्ध हो सकता है, कर्मों से नहीं। जीव के द्वारा अपने सच्चे एवं यथार्थ रूप को जान लेना ही मोक्ष है। मोक्ष और ब्रह्म—ये दोनों—पर्यायवाची शब्द हैं। जब तक जीव अज्ञान की शक्तियों से जकड़ा जाकर अपने को संसार समझता रहता है, तब तक तो वह इस संसार में इधर से उधर भटकता रहता है। किन्तु जब अतीत के संस्कार तथा वर्तमान की साधना के फलस्वरूप व्यक्ति ब्रह्म का साक्षात्कार कर लेता है (अर्थात्

अपने सही रूप को पहचान लेता है ) तब मुक्त हो जाता है, ब्रह्म हो जाता है। ज्ञान के उदय तथा अज्ञान के विनाश का ही नाम मोक्ष है।

## सांख्य और अद्वैत वेदान्त

अद्वैत वेदान्त का अध्येता व्यक्ति कभी-कभी यह सोचने लगता है कि वेदान्त की भीत्ति सांख्य के सिद्धांतों पर आधृत है।

वेदान्त सांख्य से प्रभावित है। वस्तुतः सांख्य का यह प्रभाव अद्वैत वेदान्त पर किस सीमा तक है ? इसकी परीक्षा के लिए दोनों दर्शनों की सृष्टि एवं प्रलय की प्रक्रिया तथा चेतन की विशेषताओं का अध्ययन करना होगा।

सांख्य की प्रकृति त्रिगुणात्मक है। एकत्र मिलित सत्व, रजस् एवं तमस् की साम्यावस्था का ही नाम प्रकृति है। इसी प्रकृति से समग्र जड-चेतन जगत् की सृष्टि होती है। यह जडप्रकृति जब पुरुष के सम्पर्क में आती है, तब इसमें गति स्पन्दन पैदा हो जाता है। उस समय प्रकृति से बुद्धि और बुद्धि से अहङ्कार, अहङ्कार से पञ्च तन्मात्राएँ और एकादश इन्द्रियाँ—पञ्च कर्मेन्द्रियाँ, पञ्च ज्ञानेन्द्रियाँ और मन—उत्पन्न होती हैं। पञ्च तन्मात्राओं से पञ्च महाभूतों की सृष्टि होती है।

सांख्य के अनुसार एकमात्र पुरुष के भोग एवं मोक्ष के लिए ही प्रकृति सृष्टि की ओर उन्मुख होती है। सम्पूर्ण सृष्टि अव्यक्त अर्थात् प्रकृति का ही परिणाम है।

अद्वैत वेदान्त भी सम्पूर्ण जगत् की उत्पत्ति त्रिगुणात्मक अव्यक्त अर्थात् अज्ञान से ही मानता है। यह पुरुष के स्थान में अव्यक्त के साथ ब्रह्म के संयोग को सृष्टि के कारण के रूप में स्वीकार करता है। अज्ञान भी जड़ एवं त्रिगुणात्मक माना गया है।

सांख्य सम्पूर्ण कार्य का उत्तरदायित्व प्रकृति पर ही डालता है। पुरुष सर्वथा उससे असम्पृक्त रहता है। वह बुद्धि के संयोग से अपने आप को सुखी एवं दुःखी मान बैठता है। वस्तुतः वह सृष्टि का एक तटस्थ साक्षी मात्र है। वह अहंकार से विमूढ होकर अपने आपको कर्ता मानने लगता है। सच तो यह है कि सांख्य के अनुसार पुरुष का बन्ध और मोक्ष भी असत्य है। जिस प्रकार सेना की जय-परा-

जय सेनापति पर आरोपित होती है, उसी प्रकार प्रकृति का ही बन्ध और मोक्ष पुरुष पर आरोपित होता है। देखिये—

तस्मान्न बध्यते नापि मुच्यते नापि संसरति कश्चित्।
संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः ।। (सांख्याकारिका-६२)

अद्वैत वेदान्त के अनुसार भी आत्मा ( जीव ) न बद्ध होता है और न मुक्त होता है। वह न मुमुक्षु है और न मुक्त ही। न उसका निरोध होता और न उत्पत्ति ही ( देखिये—पञ्चदशी, कूटस्थदीप प्रकरण—७१ )। यहाँ पर अद्वैत वेदान्त और सांख्य की प्रक्रिया में पर्याप्त साम्य प्रतीत होता हैं। परन्तु दोनों में भेद यह है कि सांख्य में बन्ध एवं मोक्ष की क्रिया मिथ्या नहीं है। वहाँ प्रकृति के बन्ध एवं मोक्ष पुरुष में आरोपित होते हैं। परन्तु वेदान्त में जब प्रकृति ही अज्ञान एवं भ्रान्ति है, तब बन्ध और मोक्ष भी भ्रान्त ही हैं।

अद्वैत वेदान्त में आत्मा एक है। यह अज्ञान की व्यष्टि से उपहित होकर भिन्न-भिन्न प्रतीत होता है। सांख्य पुरुष की अनेकता मानता है। उसके अनुसार पुरुष बहुत से हैं—

जन्ममरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च।
पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव ।। ( सांख्यकारिका १८ )

इस प्रकार हम देखते हैं कि सांख्य एवं वेदान्त में कतिपय बातो में साम्य है। किन्तु सांख्य की अपेक्षा अद्वैत वेदान्त के बहुत से सिद्धान्त अधिक विकसित एवं भिन्न हैं। ऐसा होना स्वाभाविक भी है। सांख्य अद्वैत वेदान्त की अपेक्षा प्राचीन है। इसमें सन्देह नहीं कि सांख्य को अपने तत्त्वों के निर्धारण में स्वतन्त्र चिन्तन करना पड़ा होगा। वेदान्त की तत्त्व-प्रक्रिया सांख्य को आधार बनाकर अधिक सरलता से विकसित हुई है। अतः वेदान्त की चिन्तनधारा का अधिक सुस्पष्ट, विस्तृत एवं तर्कसंगत होना स्वाभाविक भी है।

रमाशङ्कर त्रिपाठी

## व्याख्याकर्तुः परिचयः

ग्रामोऽस्ति गम्भीरपुरं मीरजापुरमण्डले ।
विन्ध्यक्षेत्रान्विते यत्र त्रिपाठिब्राह्मणान्वये ॥ १ ॥

जातो रामसुमेराह्वो बुधः परमधार्मिकः ।
तस्य भार्याऽञ्जनानाम्नी शङ्करस्य सती यथा ॥ २ ॥

प्रासूत चतुरः पुत्रान् प्राणौपम्येन संस्मृतान् ।
येषां ज्येष्ठो रामरूपो दयाधर्मान्वितः सुधीः ॥ ३ ॥

त्रिवेणीशङ्करः ख्यातः पण्डितोऽस्ति द्वितीयकः ।
रमाशङ्करनामाऽहं व्याख्याकृत्तु तृतीयकः ॥ ४ ॥

वात्सल्यभाङ्नः सततं चतुर्थो हरिशङ्करः ।
सहायभूतः सर्वेषामेषां स्नेहानुवर्धितः ॥ ५ ॥

सोऽहं सम्प्रार्थये मूलं परमात्मानमीश्वरम् ।
हृदयग्राहिणी भूयात् कृतिः कान्ता विदां मम ॥ ६ ॥

॥ शम् ॥

—:०:—

श्रीमत्सदानन्दयोगीन्द्रविरचितः

# वेदान्तसारः

—:*:—

अखण्डं सच्चिदानन्दमवाङ्मनसगोचरम् ।
आत्मानमखिलाधारमाश्रयेऽभीष्टसिद्धये ॥१॥

अन्वयः—( अहम् ), अभीष्टसिद्धये, अखण्डम्, सच्चिदानन्दम्, अवाङ्मनसगोचरम्, अखिलाधारम्, आत्मानम्, आश्रये ॥ १ ॥

शब्दार्थः—( अहम्=मैं ), अभीष्टसिद्धये=ग्रन्थसमाप्तिरूप अभीष्ट की सिद्धि के लिए अथवा मोक्ष-प्राप्तिरूप अभीष्ट की सिद्धि के लिए, अखण्डम्=किसी भी तरह के भेद से शून्य अथवा अविद्याकल्पित देश, काल और वस्तु के परिच्छेद से रहित (अर्थात् अनन्त), सच्चिदानन्दम्=सत्स्वरूप अर्थात् कभी भी किसी से भी बाधित न होने वाले ), ज्ञानस्वरूप या चैतन्यस्वरूप तथा आनन्दस्वरूप, अवाङ्मनसगोचरम् = वाणी और मन की पहुँच से परे ( अर्थात् अनिर्वचनीय और अचिन्त्य ), अखिलाधारम् = समस्त ( आकाश आदि प्रपञ्च ) के आश्रय ( अर्थात् सृष्टि, स्थिति तथा विनाश के कारण ), आत्मानम् = आत्मा का ( ब्रह्म का ), आश्रये = आश्रय ले रहा हूँ ॥ १ ॥

अर्थः—( मैं ) ग्रन्थ-समाप्तिरूप अभीष्ट की सिद्धि के लिए अथवा मोक्ष-प्राप्तिरूप अभीष्ट की सिद्धि के लिए किसी भी तरह के भेद से शून्य अथवा अविद्या-कल्पित देश, काल और वस्तु के परिच्छेद से रहित ( अर्थात् अनन्त ) सत्स्वरूप ( अर्थात् कभी भी किसी से भी बाधित न होने वाले ), ज्ञानस्वरूप या चैतन्यस्वरूप तथा आनन्दस्वरूप, वाणी और मन की पहुँच से परे ( अर्थात्

---

चिकीर्षितस्य ग्रन्थस्य निर्विघ्नं परिसमाप्तिकामः शिष्टाचारानुरूपं प्रतिपाद्यं वस्तु ध्वनयन् मंगलमाचरति—अखण्डमित्यादिना । अहं सदानन्दः, अभीष्टसिद्धये—अभीष्टस्य = ग्रन्थपरिसमाप्तेः निःश्रेयसस्य वा सिद्धये = लाभाय, अखण्डम्=सजातीयविजातीयस्वगतभेदशून्यम्, सच्चिदानन्दम्—सत् = सत्ता-

अनिर्वचनीय और अचिन्त्य ), समस्त ( आकाश आदि प्रपञ्च ) के आश्रय ( अर्थात् सृष्टि, स्थिति तथा विनाश के कारण ) आत्मा का ( अर्थात ब्रह्मरूप आत्मा का ) आश्रय ले रहा हूँ ॥ १ ॥

टिप्पणी—सच्चिदानन्दम्—सत्—आत्मा ( ब्रह्म ) सत्, है, क्योंकि किसी भी काल में किसी से भी उसका बाध नहीं होता। अद्वैत वेदान्त के अनुसार तीन प्रकार के सत् हैं—( १ ) प्रातिभासिक सत्, ( २ ) व्यावहारिक सत्, ( ३ ) पारमार्थिक सत्। इनमें ब्रह्म ही पारमार्थिक सत् है, अन्य सब प्रातिभासिक सत् या व्यावहारिक सत् हैं। प्रातिभासिक तथा व्यावहारिक सत् माया के कार्य हैं, अतः वे मिथ्या हैं।

चित्—आत्मा ( ब्रह्म ) चैतन्यस्वरूप है। यह चैतन्य ब्रह्म का गुण नहीं अपितु स्वरूप है। यदि इसे चैतन्यस्वरूप न माना जाय तब तो यह अन्धकार के समान जड हो जायगा।

आनन्द - ब्रह्म आनन्दस्वरूप भी है। यही कारण है कि विचारशील व्यक्ति उसकी ओर प्रवृत्त होते हैं। ब्रह्म तथा आनन्द में गुण-गुणीभाव तथा धर्म-धर्मीभाव भी नहीं है। आनन्द ब्रह्म का स्वरूप ही है।

आत्मानम्—यहाँ आत्मा शब्द का अर्थ जीवात्मा न होकर परमात्मा अर्थात् ब्रह्म है। यही कारण है कि ब्रह्म का बोध कराने वाले अखण्ड, सच्चिदानन्द आदि शब्द 'आत्मानम्' के विशेषण के रूप में प्रयुक्त हुए हैं ॥ १ ॥

---

वान्, न तु शून्यं न वाऽनृतम्, चित् = ज्ञानं स्वप्रकाशचैतन्यरूपमित्यर्थः, अनेन ब्रह्मणोऽन्धकारस्येव जाड्यं निरस्तम्, आनन्दम् = आनन्दस्वरूपम्, अनेन तस्मिन् जनानां प्रवृत्तिर्निर्दिष्टा। इयता ब्रह्मणः स्वरूपनिरूपणं विधिमुखेन कृतमधुना निषेधमुखेन तत्प्रतिपादयति—अवाङ्मनसगोचरम्—वाक् च मनश्चेति वाङ्मनसे तयोर्गोचर इति वाङ्मनसगोचरः, न वाङ्मनसगोचरः इत्यवाङ्मनसगोचरस्तम्, इन्द्रियातीतम्, अनेन ब्रह्मणः सर्वसाक्षिकत्वं सूचितम्, अखिलाधारम्—अखिलस्य = समग्रस्याकाशादिप्रपञ्चस्य आधारम्=आश्रयम्, प्रपञ्चस्य सृष्टिस्थितिलयानां कारणमिति यावत्, ब्रह्मणस्तटस्थलक्षणमेतद्यथा छत्रचामरादिकं राज्ञः, आत्मानम् = परमात्मानम्, ब्रह्म इति यावत्, आश्रये = एकत्वेन प्रतिपद्ये ॥ १ ॥

अर्थतोऽप्यद्वयानन्दानतीतद्वैतभानतः ।
गुरूनाराध्य वेदान्तसारं वक्ष्ये यथामति ॥ २ ॥

**अन्वयः**—अतीतद्वैतभानतः, अर्थतः, अपि, अद्वयानन्दान्, गुरून्, आराध्य, यथामति, वेदान्तसारम्, वक्ष्ये ॥ २ ॥

**शब्दार्थः**—अतीतद्वैतभानतः = द्वैत का भान दूर हो जाने से, अथवा आत्मा का साक्षात्कार हो जाने के कारण, अर्थतः = यथार्थ रूप से, अपि = भी, अद्वयानन्दान् = अद्वयानन्द, गुरून् = गुरु की, आराध्य = आराधना करके यथामति = बुद्धि के अनुसार, वेदान्तसारम् = वेदान्तसार ( नामक ग्रन्थ ) को, वक्ष्ये = कहूँगा ॥ २ ॥

**अर्थः**—द्वैत का भान दूर हो जाने से अथवा आत्मा का साक्षात्कार हो जाने के कारण यथार्थ रूप से ( न कि केवल नाम से ही ) अद्वयानन्द गुरु की आराधना करके ( अपनी ) बुद्धि के अनुसार वेदान्तसार ( नामक ग्रन्थ ) को कहूँगा ॥ २ ॥

**टिप्पणी**—**अर्थतोऽप्यद्वयानन्दान्**—ग्रन्थकार सदानन्द के गुरु का नाम था—अद्वयानन्द । अद्वयानन्द का अर्थ है—अद्वैत आनन्द का अनुभव करने वाले । ग्रन्थकार के गुरुदेव न केवल नाम से ही अद्वयानन्द थे अपितु अद्वैत आनन्द का अनुभव करने के कारण यथार्थ रूप से भी अद्वयानन्द थे ।

**गुरून्**—यहाँ 'गुरु' एक वचन के स्थान पर आदर की सूचना के लिये बहुवचन का प्रयोग किया गया है ।

**वेदान्तसारम्**—वेदान्तसार का अर्थ है—( १ ) वेदान्तों का सार तथा ( २ ) वेदान्तसार नामक ग्रन्थ ॥ २ ॥

**वेदान्तसारम्**—पीछे श्लोक संख्या दो में वेदान्त शब्द आया है । वेदान्त का अर्थ क्या है ? इस जिज्ञासा के उत्तर में बतला रहे हैं—

---

अर्थतोऽपीति । अतीतद्वैतभानतः—अतीतम् = अपगतम् द्वैतस्य भानम्= द्वैतभानम् यतस्तस्मात्, अथवा अतीतम् = दूरीभूतम् द्वैतं यस्मात्तदतीतद्वैतम् = प्रत्यगात्मतत्त्वम् तस्य भानम् = साक्षात्कारस्तस्मात्, अर्थतः = यथार्थतः, न तु नामत एवेति भावः, अद्वयानन्दान्—अद्वये आनन्दो येषां तान्, गुरूनत्र आदरार्थे बहुवचनम्, आराध्य = प्रणामादिना उपास्य, यथामति = बुद्धयनुसारम्, वेदांतसारम्, वक्ष्ये = प्रतिपादयिष्ये ॥ २ ॥

**वेदान्तो नामोपनिषत्प्रमाणं तदुपकारीणि शारीरकसूत्रादीनि च। अस्य वेदान्तप्रकरणत्वात्तदीयैरेवानुबन्धैस्तद्वत्तासिद्धेर्न ते पृथगालोचनीयाः ।३।**

अर्थः--( प्रमारूप ब्रह्म विद्या की ) प्रमाणरूप उपनिषदें ही मुख्यरूप से वेदान्त के नाम से जानी जाती हैं। और उन (उपनिषदों) के उपकारक ( अर्थात् उनके मत के प्रतिपादक ) शारीरकसूत्र आदि भी ( गौण रूप से ) वेदान्त हैं। इस ( वेदान्तसार नामक ग्रन्थ ) के, वेदान्त का ही प्रकरण-ग्रन्थ होने के कारण, उस ( वेदान्त ) के ही अनुबन्धों ( परमावश्यक विचारणीय अंगों ) से अनुबन्ध-युक्तता सिद्ध हो जाने के कारण उन ( अनुबन्धों ) की अलग से विवेचना करने की आवश्यकता नहीं है ॥ ३ ॥

टिप्पणी--उपनिषत्प्रमाणम्--उपनिषद् रूप प्रमाण 'उपनिषद्' शब्द की सिद्धि उप नि उपसर्गपूर्वक षद्लृ (सद्) धातु से क्विप् प्रत्यय करने पर होती है— उप + नि + षद्लृ ( सद् ) + क्विप्। षद्लृ ( सद् ) धातु के तीन अर्थ हैं-- ( १ ) विशरण अर्थात् नाश, ( २ ) गति और ( ३ ) अवसादन ( शिथिली-करण )। यहाँ इस धातु के उक्त तीनों ही अर्थ संगत होते हैं। जब कोई मुमुक्षु व्यक्ति उपनिषद् नाम से जानी जाने वाली इस ब्रह्म विद्या के उप (समीप) जाकर नि ( अर्थात् निश्चय ) के साथ इसका सेवन करता है तो यह उस मुमुक्षु के—

( १ ) "यह संसार ही सार वस्तु है" इस विचार को शिथिल कर देता है ( संसारसारतामतिं सादयति—विषादयति शिथिलयति इति वा )।

( २ ) तदनन्तर उसके जन्म-मरण रूप संसार-चक्र के कारण रूप अज्ञान का ही विनाश करती है ( दुःखजन्ममरणादिमूलाज्ञानं सादयति—उन्मूलयति )।

( ३ ) पुनः सबके अन्त में ब्रह्म के पास उस मुमुक्षु को पहुँचा देती है ( परमश्रेयोरूपं प्रत्यगात्मानं सादयति—गमयति )।

---

वेदान्तपदं विवृणोति—**वेदान्तो नामेत्यादिना**। **उपनिषत्प्रमाणम्**-उपनिषदः एव प्रमाणम्, उपनिषदो यत्र प्रमाणं वेति, **तदुपकारीणि**—तस्य=वेदान्तस्य उपकारीणि=अर्थविचारादिना अनुकूलानि, **शारीरकसूत्रादीनि**--ब्रह्मसूत्रादीनि आदिना भगवद्गीताया अपि ग्रहणम्। **अस्य**=वेदान्तसारनाम्ना सूत्रितुमारब्धस्यास्य

उक्त विवेचन से यह स्पष्ट हो गया है कि मुख्यरूप से ब्रह्मविद्या ही वेदान्त के नाम से कही गई है। किन्तु इस ब्रह्मविद्या के प्रतिपादक ग्रन्थ भी प्रतिपाद्य-प्रतिपादक सम्बन्ध से उपनिषद् कहे जाते हैं।

शारीरकसूत्रादीनि—"शरीरमेव शारीरकं तत्र भवो जीवः शारीरकः सः सूत्र्यते = याथातथ्येन निरूप्यते यैस्तानि शारीरकसूत्रादीनि "अथातो ब्रह्मजिज्ञासा, इत्यादीनि वेदान्तसूत्राणि।" इस कुत्सित शरीर को ही शरीरक कहते हैं। इसमें निवास करनेवाला आत्मा शारीरक कहा जाता है। इसका ठीक-ठीक निरूपण जिन सूत्रों में किया जाय वे शारीरकसूत्र कहे जाते हैं। शारीरक सूत्र को ही ब्रह्मसूत्र या वेदान्तसूत्र भी कहते हैं। आदि पद से गीता तथा शंकराचार्य के द्वारा कृत उसके भाष्य को ग्रहण किया गया है।

प्रकरण—किसी एक शास्त्र के एक अंश से सम्बद्ध तथा दूसरे शास्त्रों के भी यथावसर उपयुक्त अंश को ग्रहण करने वाले ग्रन्थ को विद्वान् लोग प्रकरण कहते हैं—

"शास्त्रैकदेशसम्बद्धं शास्त्रकार्यान्तरे स्थितम्।
आहुः प्रकरणं नामग्रन्थभेदं विपश्चितः" ॥ ३ ॥

वेदान्त के वे चार अनुबन्ध ( अर्थात् परस्पर शृंखलित विचारणीय तत्त्व ) कौन-कौन हैं ? इस जिज्ञासा के उत्तर में बतला रहे हैं—

## अनुबन्धचतुष्टयम्

**तत्रानुबन्धो नामाधिकारिविषयसम्बन्धप्रयोजनानि ॥ ४ ॥**

अर्थः—वेदान्त के अनुबन्ध हैं—(१) अधिकारी, (२) विषय, (३) सम्बन्ध और (४) प्रयोजन। ( और ये ही इस वेदान्तसार के भी अनुबन्ध हैं ) ॥ ४ ॥

अब आगे क्रमशः इन चारों अनुबन्धों का निरूपण किया जा रहा है—

**अधिकारी तु विधिवदधीतवेदवेदाङ्गत्वेनापाततोऽधिगताखिलवेदार्थोऽस्मिन् जन्मनि जन्मान्तरे वा काम्यनिषिद्धवर्जनपुरस्सरं नित्यनैमित्तिकप्रायश्चित्तोपासनानुष्ठानेन निर्गतनिखिलकल्मषतया नितान्तनिर्मलस्वान्तः साधनचतुष्टयसम्पन्नः प्रमाता ॥ ५ ॥**

अर्थः—जिसने वेदों तथा ( शिक्षा, कल्प, व्याकरण, निरुक्त, छन्द और ज्योतिष रूप ) वेदांगों का विधिपूर्वक अध्ययन करके समस्त वेदों के तात्पर्य को

---

ग्रन्थस्य, तदीयैः=वेदान्तीयैरित्यर्थः, तद्वत्तासिद्धेः=अनुबन्धवत्तासिद्धेः, ते=अनुबन्धा इत्यर्थः ॥ अधिकारिणं निरूपयति—अधिकारीति। अधिगताखिल-

